RASHTRIYA SANSKRIT SANSTHAN, NEW DELHI
*(Kendriya Sanskrit Vidyapeetha, Tirupati Series No. 36)*

# SIDDHĀNTALAKSANAM

*OF*

SRI GANGESOPĀDHYĀYA

with **DĪDHITI** of Śrī Raghunāthaśiromaṇi

*AND*

DĪDHITI - PRAKĀŚIKĀ of Śrī Gadādhara - Bhaṭṭācārya



**KENDRIYA SANSKRIT VIDYAPEETHA**
**TIRUPATI**
**1985**

राष्ट्रियसंस्कृतसंस्थानम्, नवदेहली

(केन्द्रीयसंस्कृतविद्यापीठग्रन्थमाला-संख्या ३६)

श्रीगङ्गेशोपाध्यायविरचितं

# सिद्धान्तलक्षणम्

श्रीरघुनाथशिरोमणि विरचितया **दीधित्या**

श्रीगदाधरभट्टाचार्यकृतया **दीधितिप्रकाशिकया** च अलंकृतम्





केन्द्रीयसंस्कृतविद्यापीठम्

तिरुपतिः

१९८५

# सिद्धान्तलक्षणम् - प्रस्तावना

अनुमितिहेतुभूतव्याप्तिज्ञानविषयीभूता व्याप्तिः केति प्रश्नमुपक्षिप्य अव्यभिचरितत्वं व्याप्तिरिति पक्षं केवलान्वयिन्यभावादिति दूषयित्वा तदुपरि सिंहव्याघ्राभ्यामुक्ते व्याप्तिलक्षणे अपि खण्डयित्वा व्यधिकरणधर्मावच्छिन्नाभावमादाय समन्वयप्रकारं च निराकृत्य पूर्वपक्षप्रकरणे अनेकविधानि व्याप्तिलक्षणानि दूषितानि मणावितः प्राक् ।

इदानीं सिद्धान्तलक्षणाख्येऽस्मिन् ग्रन्थे सिद्धान्तभूतं व्याप्तिलक्षणमुच्यते मणिकारैः । तच्च "प्रतियोग्यसमानाधिकरणयत्समानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नं यन्न भवति तेन समं तस्य सामानाधिकरण्यं व्याप्तिः" इति । इदमेकमेव वाक्यमवलम्ब्य बहुधा विवेचनं कृतं दीधितिकारैः । दीधितिव्याख्यानकारैः गदाधरभट्टाचार्यैश्च सपरिष्कारं बहु विवेचितम् । गदाधरीयस्य दक्षिणप्रान्ते भूयान् पठनपाठनप्रचारः । अयं ग्रन्थः बहोः कालात् पूर्वं पार्थक्येन काञ्च्यां प्रतिवादिभयङ्कर – अनन्ताचार्यस्वामिभिः स्वीयसुदर्शनमुद्रणालये सुष्ठु मुद्रापितः अतीतत्रिंशद्वर्षेभ्यो दुर्लभो जातः । तेन छात्राणां विदुषां च संजातं क्लेशं दृष्ट्वा अस्य पुनर्मुद्रणमुचितं मन्यमानेन मया राष्ट्रियसंस्कृतसंस्थानस्य पुस्तकप्रकाशनसमितौ प्रस्तुतम् । अधिकारिणश्च कर्मैतदन्वमन्यन्तेति तेषां विषये अधमर्णाः स्मः । अस्य पुनर्मुद्रणमनुमतवद्भ्यः प्रथमप्रकाशकानां प्रतिवादिभयंकर – अनन्ताचार्यस्वामिनां सत्पुत्रेभ्यः गाधि – कृष्णमाचर्यस्वामिभ्यः सनमस्कारं कार्तज्ञ्यमावेदयामि । पुनर्मुद्रणं साधु कृतवद्भ्यः उदयप्रिण्टर्स् अधिकारिभ्यः श्रेय आशंसनपूर्वकं कार्तज्ञ्यं प्रकटयामि ।

तिरुपतिः

एन्. एस्. रामानुजताताचार्यः
केन्द्रीयसंस्कृतविद्यापीठम्

श्रीरस्तु ।

श्रीहयग्रीवाय नमः ।

# शास्त्रमुक्तावली ।

तत्त्वचिन्तामणौ-

## सिद्धान्तलक्षणम् ।

**अत्रोच्यते;– प्रतियोग्यसमानाधिकरण यत्समानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नं यन्न भवति तेन समं तस्य सामानाधिकरण्यं व्याप्तिः ॥**

(*)

[ दीधितिः । ]

**प्रतियोग्यसमानाधिकरणे**ति ।

[ गदाधरीयम् । ]

**प्रतियोगितावच्छेदकावच्छिन्नं यन्न भवती**ति यथाश्रुतमूलात् यत्पदार्थे साध्ये प्रतियोगितावच्छेदकावच्छिन्नान्यत्वं प्रतीयते, ततश्च वह्निमान् धूमादित्यादौ हेतुसमानाधिकरणमहानसीयवह्नित्वाद्यवच्छिन्नाभावमादाय दोषो दुर्वारः, सर्वेषामेव वह्न्यादीनां तादृशाभावप्रतियोगितावच्छेदकविशिष्टतया तदन्यत्वासम्भवात् । यत्पदस्य यद्रूपावच्छिन्नपरतया

यद्रूपावच्छिन्नस्य प्रतियोगितावच्छेदका ये ये धर्माः प्रत्येकं तदवच्छिन्नान्यत्वमित्यर्थे, साध्यतावच्छेदकस्य तत्तत्प्रतियोगितावच्छेदकधर्मावच्छिन्नभेदकूटेन प्रत्येकं सामानाधिकरण्ये पर्यवसिते वह्न्यादिसाध्यकहेतौ वह्नित्वादिभिर्भिन्नवह्न्यादिव्यक्तयन्तर्भावेन महानसीयवह्नित्वाद्यवच्छिन्नभेदैः प्रत्येकं सामानाधिकरण्यसत्त्वेऽप्येकव्यक्तिसत्तादिसाध्यके सत्तात्वादौ हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकविशिष्टसत्तात्वाद्यवच्छिन्नभेदसामानाधिकरण्यासत्त्वादव्याप्तिः; यद्रूपावच्छिन्नं प्रतियोगितावच्छेदकावच्छिन्नाविषयकप्रतीतिविषय इत्यर्थे उक्तदोषोद्धारेपि यद्रूपं प्रतियोगितावच्छेदकभिन्नं प्रतियोगितावच्छेदकाविषयकप्रतीतिविषयो वा इत्यत एव सामञ्जस्ये प्रतियोगितावच्छेदकविशिष्टाविषयकप्रतीतिविषयत्वस्य साध्यतावच्छेदकविशिष्टे निवेशनमनुचितम् . एवं स्वरूपसम्बन्धरूपावच्छिन्नत्वविवक्षया यद्रूपावच्छिन्नं प्रतियोगित्वमुक्ताभावप्रतियोगितावच्छेदकानवच्छिन्नामित्यर्थे शुद्धवह्नित्वादिरूपसाध्यतावच्छेदकावच्छिन्नप्रतियोगित्वे महानसीयत्वादिविशिष्टवह्नित्वाद्यनवच्छेद्यत्वं सुलभमेव; यद्रूपावच्छिन्नं प्रतियोगित्वं तादृशप्रतियोगिताभिन्नमित्युक्तौ समवायादिना घटादौ साध्ये संयोगादिना घटादिहेतावतिव्याप्तिः, संयोगादिसम्बन्धावच्छिन्नघटत्वाद्यवच्छिन्नप्रतियोगितायां हेतुमन्निष्ठाभावप्रतियोगिताभेदसत्त्वात् । 'इदं वाच्यं ज्ञेयत्वा' दित्यादावव्याप्तिवारणाय हेतुमन्निष्ठाभावप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्य निवेशनीयतया व्यभिचारिमात्र एव च सम्बन्धान्तरावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताभेदसत्त्वेनाऽतिव्याप्तिस्स्यादिति प्रतियोगिताभेदमुपेक्ष्य प्रतियोगितावच्छेदकावच्छिन्नभेदोपादानम् । साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वं भेदानुयोगिसाध्यतावच्छेदकावच्छिन्नप्रतियोगितायां निवेश्याऽतिव्याप्तिवारणे केवलान्वयिसाध्यके तादृशप्रतियोगित्वाऽप्रसिद्ध्या

[दी] प्रतियोग्यसमानाधिकरण-

---

ऽव्याप्तिरिति रीत्या विशिष्टाव्याप्तिपरिष्कारेपि गौरवमित्युपाध्यायोपदिष्ट नञ्व्यत्यासपक्षमवलम्ब्य व्याचष्टे–**प्रतियोग्यसमानाधिकरणे ति** ।

नच नञ्व्यत्यासेन साध्यतावच्छेदके प्रतियोगितावच्छेदकभेद निवेशेपि शुद्धवह्नित्वादौ महानसीयत्वादिविशिष्टवह्नित्वादिभेदस्याऽसत्त्वात्साध्यतावच्छेदके प्रतियोगितावच्छेदकाविषयकप्रतीतिविषयत्वमेव विवक्षणीयम्, तदपेक्षया साध्यतावच्छेदकावच्छिन्नप्रतियोगित्वे प्रतियोगितावच्छेदकानवच्छेद्यत्वनिवेशपक्षे न गौरवमिति वाच्यम्; प्रत्येकं घटादौ घटपटोभयत्वाद्यवच्छिन्नभेदवच्छुद्धवह्नित्वादौ महानसीयत्वाद्यन्तर्भावेन पर्याप्तविशिष्टवह्न्याद्यभावीयप्रतियोगितावच्छेदकत्वावच्छिन्नभेदस्य सुघटत्वात् अवच्छेदकाविषयकप्रतीतिविषयत्वविवक्षणमन्तरेणैव प्रतीकाराद्वच्छेदकत्वस्य वह्नित्वमहानसीयत्वादिनिष्ठस्य सम्बन्धादिभेदेन भिन्नत्वेपि तत्तत्प्रतियोगितावच्छेदकत्वत्वाद्यनुगतरूपेण व्यासज्यवृत्तितायाश्चक्रवर्तिलक्षणे, वह्नित्वादेरवच्छेदकत्वपर्याप्त्यनधिकरणत्वमुपपादितवतो दीधितिकारस्याऽनुमतत्वात्. सार्वभौमैस्तु विशेषधर्मावच्छिन्नप्रतियोगिताकूटानतिरिक्तसामान्यधर्मावच्छिन्नप्रतियोगितासम्बन्धस्य विशेषरूपेणाऽव्यासज्यवृत्तेरपि सामान्यधर्मावच्छिन्नप्रतियोगितासम्बन्धत्वेनाऽनुगतेन व्यासज्यवृत्तित्वमिति कण्ठरवेणैवोक्तम्. एवं सति 'महानसीयवह्निभिन्नवाह्निमान् धूमा' दित्यादौ साध्यतावच्छेदकमहानसीयवह्निभिन्नत्ववह्नित्वाद्योः प्रत्येकं धूमादिसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वपर्याप्त्यनधिकरणत्वेपि प्रकृतानुमितिविधेयतावच्छेदकता यादृशरूपावच्छिन्ने पर्याप्ता तादृशरूपावच्छिन्नानुयोगिताकतादृशावच्छेदकत्वावच्छिन्नभेदस्यैव व्याप्तिघटकत्वोपगमेन नातिव्याप्तिः, उक्तस्थलीयानु-

[दी] यद्रूपविशिष्टसमानाधिकरणाभाव-

---

मितिविधेयतावच्छेदकतापर्याप्त्यवच्छेदकदर्शितधर्मद्वयनिष्ठद्वित्वाद्यवच्छिन्ने-हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वपर्याप्तिमति विरोधेन तदवच्छिन्नभेदासत्त्वात् । साध्यतावच्छेदकवृत्तिवह्नित्वत्वमहानसीयवह्निभिन्नत्ववह्नित्वोभयत्वाद्यनुपस्थितिकाले तदवच्छिन्नेऽनवच्छेदकत्वस्य दुर्ग्रहतयाऽनुमित्यनुत्पादो व्यापकताज्ञानकारणतावादिनामिष्ट एव । तेन तेन रूपेणाऽनवच्छेदकताग्रहात् तत्तद्रूपानवच्छिन्नविधेयतावच्छेदकताकानुमित्यनुपपत्तिश्च केवलान्वयिग्रन्थे ग्रन्थकृतैव वक्ष्यते । यत्त्वतत्त्वेन हेतोर्निवेशे हेतुव्यक्तिभेदेन व्याप्तिर्भिद्येत, सा च नानुमित्युपयोगिनी, पक्षीयधूमादिव्यक्तिव्यापकतायाः पूर्वं वह्न्यादावगृहीतत्वादिति **यद्रूपविशिष्टे** त्युक्तम्; तथाच धूमत्वादिरूपहेतुतावच्छेदकधर्मेणैव विशिष्य निवेश्य तत्तद्रूपावच्छिन्नहेतुकानुमित्यौपयिकव्याप्तिर्निर्वाच्या, तथाच महानसादौ धूम-वह्न्यादिसहचारग्रहाद्ग्रहद्यादौ तद्धूमत्वाद्यवच्छिन्ननिरूपिताया इव पक्षीयधूमादिसाधारणधूमत्वाद्यवच्छिन्ननिरूपिताया अपि व्यापकताया ग्रहसम्भवात् तद्घटितव्याप्तेः पक्षधर्मे धूमे ग्रहादनुमितिनिर्वाह इति भावः ।

नच सामानाधिकरण्यस्य व्याप्तित्वपक्षे हेतुव्यक्तिभेदेन व्याप्तिभेद अवश्यक एवेत्यनुगतरूपेण हेतुनिवेशो व्यर्थ इति वाच्यम्; हेतुव्यक्तिभेदेन व्याप्तिभेदेऽप्यनुगतरूपेण हेतुनिवेशे धूमव्यापकवह्निप्रतियोगिकधूमनिष्ठसामानाधिकरण्यत्वादिना धूमादिनिष्ठसकलवह्निसामानाधिकरण्यव्यक्तीनामनुगमात् सामान्यप्रत्यासत्त्या पक्षीयहेतुनिष्ठव्याप्तेरपि प्रथमं ग्रहसम्भवेनानुमित्युपपत्तेः , तत्तव्द्यक्तित्वेन हेतुनिवेशेऽननुगमात् , सामान्यप्रत्यासत्त्यापि पक्षीयहेतुनिष्ठव्याप्तेर्व्याप्तित्वेन दुर्ग्रहतयाऽनुमित्यनुपपत्तेः । हेतुतावच्छेदकाश्रयाधिकरणत्वमुपेक्ष्य तद्विशिष्टनिरूपिताधिकरणत्वप्रवेशप्रयोजनमग्रे वक्ष्यते ।

[दी] प्रतियोगितानवच्छेदको यो धर्मः तद्धर्मावच्छिन्नेन येन केनापि समं

प्रतियोगितानवच्छेदकत्वमात्रेण साध्यतावच्छेदकनिवेशे वह्नित्वत्वादिना वह्नित्वादिकमनवगाहमानात् प्रतियोगितानवच्छेदककसमानाधिकरणवानित्यादिज्ञानाद्वह्निमानित्याद्यनुमितिस्स्यात् ; नचेष्टापत्तिसम्भवः; कदाचिद्वह्नित्वेन कदाचिद्द्रव्यत्वादिना वह्न्यनुमितिरिति नियमानुपपत्तेः । नचाऽनवच्छेदकत्वेन तत्तद्धर्मावगाहित्वमेव व्याप्तिग्रहस्याऽनुमितौ विधेयतावच्छेदकतया तत्तद्धर्मभाननियामकमिति वाच्यम् ; अनवच्छेदकत्वेन वह्नित्वादिभाने द्रव्यत्वादिभानस्यापि प्रायशस्सम्भवात् . एवं तत्तत्साध्यतावच्छेदकावच्छिन्नाव्यभिचारितया हेतुज्ञानस्य, हेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वमात्रेण तत्तत्साध्यतावच्छेदकावगाहिव्याप्तिज्ञानांशे ऽविरोधितया विशिष्य साध्यतावच्छेदकानवगाहिव्याप्तिज्ञानस्य हेतुत्वे व्यभिचारस्य हेत्वाभासतानुपपत्तिश्चेति विशिष्य साध्यतावच्छेदकस्य व्याप्तिघटकतालाभाय 'प्रतियोगितानवच्छेदकावच्छिन्नेने' त्यनुक्त्वा **प्रतियोगितानवच्छेदको यो धर्मस्तदवच्छिन्नेने**त्युक्तम् । यत्र वह्नित्वत्वादिविशेषणावच्छिन्नस्य साध्यतावच्छेदकता तत्र तेन तेन रूपेणैव तत्तद्धर्माणां व्याप्तिघटकता, यत्र स्वरूपत एव वह्नित्वाद्यखण्डधर्माणां साध्यतावच्छेदकत्वम्, तत्रापि विशेषणानवच्छिन्नतत्तद्धर्मघटिततत्तद्धर्मवदितरावृत्तित्वरूपवह्नित्वत्वादिना तन्निवेशो न तु स्वरूपत एव; अनवच्छेदकत्वरूपविशेषणपुरस्कारेण भाने निर्विशेषणकभानात्मकस्य स्वरूपतो भानस्याऽसम्भवात् वह्न्यादीतरावृत्तित्वस्य वह्न्यादिमात्रवृत्तिधर्मान्तरसाधारण्येपि तन्मात्रपुरस्कारेण व्यापकतावच्छेदकत्वग्रहस्यापि वह्नित्वाद्यवच्छिन्नविधेयकानुमितिहेतुत्वमपेयते, सकलवह्न्यादिवृत्तित्वविषयतानिवेशे गौरवात् ; सकलवह्न्यादि

[दी] सामानाधिकरण्यं तद्रूपविशिष्टस्य तद्धर्मावच्छिन्नयावन्निरूपिता व्याप्ति रित्यर्थः ।

---

वृत्तित्वस्य वह्न्यादीतरवृत्तिसाधारणतया तन्मात्रपुरस्कारेण व्यापकतावच्छेदकत्वग्रहस्य न हेतुतासम्भवः; तथा सति इन्धनादिहेतुनापि वह्नित्वाद्यवच्छिन्नानुमितिप्रसङ्गात् , सकलवह्न्यादिवृत्तिद्रव्यत्वादाविन्धनादिव्यापकतावच्छेदकत्वसत्त्वात् । वह्नित्वादिनिष्ठतद्व्यक्तित्वधूमजनकतावच्छेदकजातित्वादेः वह्नित्वादिमात्रवृत्तित्वेपि तेन रूपेण व्यापकतावच्छेदकत्वग्रहाद्वह्निमानित्याद्यनुमितिरनुभवविरुद्धा, येन रूपेणोपस्थिते वह्नित्वादौ वह्न्यादीतरसाधारण्यसंशयो न जायते तत्पुरस्कारेण व्यापकतावच्छेदकत्वग्रहादेवोक्तानुमित्युत्पादानुभवात् ; अत एव ज्ञानत्वत्वानुभवत्वव्यापकगुणत्वव्याप्यजातित्वयोरविशेषेण ज्ञानत्वत्वरूपेण व्यापकतावच्छेदकत्वग्रहात् ज्ञानवानयमित्यनुमितिर्न भवितुमर्हतीति दीधितिकारवक्ष्यमाणदूषणं प्रत्युक्तम् । अधिकमग्रे वक्ष्यामः ।

तत्तद्व्यक्तिसामानाधिकरण्यं न तत्तद्व्यक्तिगमकताप्रयोजकम् , पर्वतीयधूमे महानसीयवह्निसामानाधिकरण्याऽग्रहेपि ततः पर्वते लाघवज्ञानादिवशान्महानसीयवह्न्यनुमितेरिति दर्शयति – **येन केना** पीति **याव न्निरूपिते** त्याभ्याम् । **तद्रूपविशिष्टस्य तद्धर्मावच्छिन्नयावन्निरूपिता व्याप्ति** रिति । तद्रूपावच्छिन्नस्य तद्धर्मावच्छिन्नयावद्व्यक्तिगमकताप्रयोजिका व्याप्तिरित्यर्थः । यथाश्रुते एकसाध्यव्यक्तिसामानाधिकरण्यस्याऽपरव्यक्तिप्रतियोगिकत्वासम्भवेनाऽसङ्गतेः, यत्र एकापि साध्यतावच्छेदकव्यक्तिर्न सकलहेतुमद्वृत्तितावच्छेदिका तत्रानुगतरूपावच्छिन्नेनापि तेन रूपेण न तादृशहेतुव्यापकतासम्भवः, सकलसाध्यतावच्छेदकव्यक्तीनामेव चालिनीन्यायेन हेतुसमानाधिकरणतत्तद्व्यक्त्यवच्छिन्नाभावप्रतियोगिताव-

[दी] दण्ड्याद्यौ साध्ये परम्परासम्बद्धदण्डत्वादिकमेव साध्यतावच्छेदकम्, अतो नाऽव्याप्तिः ।

---

च्छेदकत्वादित्याशङ्कामिष्टापत्त्या परिहरति—**दण्ड्याद्या** विति । **परम्परासम्बद्ध** मिति । स्वसमवायसंयोगादिसम्बन्धेन साध्यसम्बद्धमित्यर्थः । एतच्च साध्यावृत्तितया दण्डत्वादेर्न व्यापकतावच्छेदकत्वसम्भव इत्याशङ्कानिराकरणाय । **साध्यतावच्छेदकम्** — दण्डिसंयोगत्वादिरूपनानाधिकरणवृत्तितावच्छेदकावच्छिन्नहेतुव्यापकतावच्छेदकमित्यर्थः; एवकारेण दण्डादिरूपसखण्डधर्मव्यवच्छेदः; तथाच तत्र प्रतियोगितानवच्छेदकत्वस्य दुरुपपादत्वेपि न क्षतिः, दण्डत्वादिनैव प्रकारेण तद्धेतुकदण्ड्याद्यनुमितेरुपगन्तव्यत्वात्, दण्डादौ व्यापकतावच्छेदकत्वभ्रमादेव दण्डादिप्रकारकदण्ड्यनुमितेरुपगमात, स्वाश्रयघटितपरम्परासम्बन्धेन यत्र धर्मे व्यापकतावच्छेदकत्वग्रहस्तद्विशिष्टधर्मिप्रकारेण सामानाधिकरण्यप्रतियोगितया साध्यावगाहिव्याप्तिग्रहस्यैव वा तद्धर्मविशिष्टदण्डादिरूपधर्मिणोऽनुमितिविधेयतावच्छेदकताप्रयोजकत्वोपगमेन दण्डिमानित्याद्याकारानुमितेः भ्रमशून्यतादशायां निर्वाह्यत्वादिति भावः ।

अथ महानसीयत्वादिसहितवह्नित्वादेर्धूमादिमन्निष्ठाभावप्रतियोगितावच्छेदकत्वेपि शुद्धवह्नित्वादिरूपसाध्यतावच्छेदकस्य तादृशप्रतियोगितानवच्छेदकत्ववत्तत्तादिविशिष्टदण्डस्य तादृशप्रतियोगितावच्छेदकत्वेपि दण्डत्वाद्यवच्छिन्नस्य तादृशप्रतियोगितानवच्छेदकत्वस्य सुघटतया तस्य व्यापकत्वावच्छेदकत्वानुपगमो न सङ्गच्छते; नच तद्दण्डी नास्तीति बुद्धौ तत्त्वोपलक्षित एव दण्डे प्रतियोगितावच्छेदकतापर्याप्तिर्भासते, न तु तत्तामन्तर्भाव्य, तत्त्वोपलक्षितव्यक्तेरेवाऽनतिप्रसक्ततया तत्तांशस्यावच्छेदकान्तर्भावे गौरवात्, अतो विशेष्यस्यावच्छेदकत्वपर्याप्त्याधिकरणतया

दण्डत्वविशिष्टस्यापि तस्यानवच्छेदकत्वं दुर्घटम् । महानसीयवह्न्याद्यभावप्रतियोगितायां वह्नित्वादेरतिप्रसक्ततया तन्मात्रेऽवच्छेदकतापर्याप्त्यसम्भवेन महानसीयत्वादेरवच्छेदकान्तर्भाव आवश्यक इति शुद्धवह्नित्वादेः तादृशप्रतियोगितानवच्छेदकत्वं सुघटमिति वाच्यम्; स्वरूपतो भासमानस्यैव स्वरूपतोऽवच्छेदकतायाः सिद्धान्तसिद्धतया सखण्डपदार्थस्य दण्डादेः स्वरूपतोऽवच्छेदकत्वासम्भवेन दण्डत्वादिविशिष्टस्यातिप्रसक्ततया तत्त्वादिरूपविशेषणमनन्तर्भाव्य तत्रावच्छेदकत्वपर्याप्तेरयोगात्; अभावप्रतियोगितावच्छेदकतया भासमाने उपलक्षणीभूतधर्मान्तरस्य भानोपगमे उपलक्षणतया दण्डत्वमात्रं तत्तद्दण्डावच्छिन्नाभावप्रतियोगितावच्छेदकतया भासमानतद्दण्डांशे विषयीकृत्य दण्डिमति दण्डी नास्तीति प्रत्ययस्य दुर्वारत्वाच्च ।

अत्र केचित् — ; उक्तानुशयेनैव दण्ड्यादा वित्यादिपदोपादानम्; आदिपदाच्च पृथिवीत्वादिव्याप्यजातित्वादिनाऽनुगतीकृतघटत्वपटत्वमृत्तिकात्वपाषाणत्वादिना पृथिव्यादिहेतुकसाध्य परिग्रहः । समवायादिना हेतुभूतपृथिव्यादिमति तन्तुकपालादौ विशेषणानवच्छिन्नघटत्वपटत्वाद्यवच्छिन्नाभावस्य सत्त्वात्, सर्वास्वेव साध्यतावच्छेदकतादृशजातिषु तथाविधाभावप्रतियोगितावच्छेदकत्वपर्याप्तेस्तासां व्यापकतावच्छेदकत्वाऽसम्भवेन तदनुगमकोक्तधर्मस्यैव परम्परासम्बन्धेन तथात्वोपगमस्यावश्यकत्वादित्याहुः ।

अन्ये तु— तत्तद्दण्डवान्नास्तीत्यादौ प्रतियोगिविशेषणतया भासमानदण्डादिष्वेव प्रतियोगितावच्छेदकत्वपर्याप्तिर्भासते, तद्विशेषणतत्त्वादौ तु तदवच्छेदकतावच्छेदकत्वमेव, प्रतियोगिताव्यधिकरणस्य तदवच्छेदकत्वासम्भवेन तदन्तर्भावेन तदवच्छेदकतापर्याप्त्यसम्भवात् । न चानवच्छिन्नमवच्छेदकत्वमेव निवेशनीयमिति वाच्यम्, सखण्डसाध्यतावच्छेदकव्यभिचारिण्यतिप्रसङ्गात्; अनवच्छिन्नावच्छेदकत्वमेव च स्वरूप

तोऽवच्छेदकत्वम् , तत्सखण्डे नास्त्येव , अतो दण्डादेरनवच्छेदकत्वं दुर्घटम् ; महानसीयवह्निर्नास्तीत्यादौ च महानसीयत्वादेः प्रतियोगिन्येव विशेषणतया भानात्तदन्तर्भावेनैव प्रतियोगितावच्छेदकत्वपर्याप्तिर्भासत इति विशेषः । अथ वह्नित्वाद्यंश एव सामानाधिकरण्यसम्बन्धेन विशेषणतया महानसीयत्वादिकमवगाहमाना महानसीयत्वविशिष्टवह्नित्ववान्नास्तीत्याद्याकारिका या प्रतीतिस्तस्या उक्तयुक्त्या वह्नित्वादावेव प्रतियोगितावच्छेदकत्वपर्याप्तिविषयकतया वह्नित्वादेरप्यनवच्छेदकत्वं दुर्घटमेव स्यात् ; यदि च वह्नित्वादेस्समवायेन प्रतियोगितायां सामानाधिकरण्यसम्बन्धेन च महानसीयत्वादेस्तदवच्छेदकतायामवच्छेदकत्वे गौरवान्महानसीयत्वादिसहितस्य वह्नित्वादेः प्रतियोगितायामेवावच्छेदकत्वम् , उक्तप्रतीतिस्तु कम्बुग्रीवादिमान्नास्तीति प्रतीतिवदवच्छेदकत्वांशे भ्रमरूपैवेत्युच्यते ? , तदा यत्र सामानाधिकरण्यसम्बन्धेन महानसीयत्वादिविशिष्टस्य वह्नित्वादेस्साध्यतावच्छेदकता तत्स्थलीयव्यभिचारिणि धूमादिहेतावतिव्याप्तिरिति स्वविशिष्टसम्बन्धिनिष्ठेत्यादिना निर्वाच्यं पारिभाषिकमेवावच्छेदकत्वं निवेशनीयम् ; तच्च तल्लक्षणे यादृशस्य स्वपदार्थस्य निवेशः तादृशत्वम् ; एवंच महानसीयत्वादिविशिष्टस्य वह्नित्वादेः तत्र स्वपदेनोपादानसम्भवात् विशिष्टवह्नित्वादिकमेव पारिभाषिकमवच्छेदकम् , तद्भेदश्च शुद्धवह्नित्वादावपि दुर्घटः ; तथाचावच्छेदकं यादृशं स्वं तादृशाविषयकप्रतीतिविषयत्वमेवानवच्छेदकत्वपदेन विवक्षणीयम् ; तथाच सति सखण्डस्य दण्डादेस्स्वरूपतोऽभानात्तत्तादिविशेषणविशिष्टस्यैवावच्छेदकलक्षणस्थस्वपदेनोपादेयतया तद्विशिष्टाविषयकप्रतीतिविषयत्वस्य दण्डत्वादिविशिष्टस्य सुघटत्वाद्व्यापकतावच्छेदकत्वमव्याहतमेवेति चेन्न, पारिभाषिकावच्छेदकत्वस्य स्वत्वघटितत्वेनाऽननुगतस्याभावकूटज्ञानासम्भवेन प्रतियोगितायास्स्वरूपसम्बन्धरूपावच्छेदकत्वस्याऽगत्या गुरुधर्मसाधारण्यमङ्गीकृत्य व्याप्तिलक्षणे तदेव निवेशनीयम् ; एवंच सामा-

नाधिकरण्यसम्बन्धेन महानसीयत्वादिविशेषणावच्छिन्नस्य वह्नित्वादेः हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वेपि महानसीयत्वादिविशिष्टनिरूपित समवायादेरेव प्रतियोगितावच्छेदकताघटकसम्बन्धत्वं तत्रापेयम् , शुद्ध समवायादिना वह्नित्वादेरतिप्रसक्तत्वात् , शुद्धसमवायादेस्तत्रावच्छेदकतावच्छेदकत्वे महानसीयत्वादिसामानाधिकरण्योपलक्षितवह्नित्वाद्यवच्छिन्नाभावात्तद्विशिष्टवह्नित्वाद्यवच्छिन्नाभावस्य वैलक्षण्यानुपपत्तेश्च ; तथाच साध्यतावच्छेदकताघटकशुद्धसमवायादिनाऽखण्डवह्नित्वादेरनवच्छेदकत्वं न दुर्लभम् । नच महानसीयत्वादिसमानाधिकरण्यस्य यत्रोपलक्षणता तत्र तस्यावच्छेदककोटौ न प्रवेशः , यत्र विशेषणत्वं तत्र तत्प्रवेश इत्यत एव वैलक्षण्यमिति वाच्यम् ; उपलक्षणीभवत्तत्तद्रूपावच्छिन्नप्रतियोगितावच्छेदकताकाभावबुद्धावपि त त्त द्रू प स्य प्रतियोगितावच्छेदकांशे प्रकारतया भानात्तत्रावच्छेदकतावच्छेदकत्व (भाने)स्याऽऽवश्यकतयाऽवच्छेदकशरीराप्रवेशरूपोपलक्षणताया उपलक्षणविधयाऽवच्छेदके तत्रासम्भवात् , यदुपलक्षितनिरूपितसमवायादेरवच्छेदकताघटकसम्बन्धत्वं तस्योपलक्षणतयाऽवच्छेदकत्वम् , यद्विशिष्टनिरूपितसमवायादेरवच्छेदकताघटकसम्बन्धत्वं तस्य विशेषणविधयाऽवच्छेदकत्वमित्यस्यैव विशेषत्वात् ; एवंचैकत्वप्रागभावविशिष्टघटादेस्संयोगादिसम्बन्धेनाभावस्य प्रतियोगितायाप्रसिद्धतया विशिष्टनिरूपितसंयोगादेरवच्छेदकत्वासम्भवेनाऽगत्या विशेषणविधया प्रतियोगितावच्छेदकत्वस्यान्यथैव वैलक्षण्यस्योपपादनीयतया शुद्धसमवायादेरेव विशिष्टसत्ताद्यभाव प्रतियोगितावच्छेदकसम्बन्धतया तादृशाभावस्य तादृशसम्बन्धेन प्रतियोगिसमानाधिकरणतया दीधितिकृतां प्रतियोगितावच्छेदकविशिष्टासामानाधिकरण्यपर्यन्तानिवेशव्याप्तिसङ्गतिः. माभूद्वा विशिष्टनिरूपितसमवायत्वादिना प्रतियोगितावच्छेदकतावच्छेदकसम्बन्धता, तथापि महानसीयत्वादिसामानाधिकरण्योपलक्षितवह्नित्वादेस्तद्विशिष्टवह्नित्वादेश्च प्रतियोगितावच्छे·

दकतयोर्भेदेन वैलक्षण्यम्; आद्या तद्धर्मावच्छिन्ना विशेष्यपर्याप्ता, अन्त्या च विशेष्यविशेषणभावापन्नयोः धर्मधर्मिणोर्द्वयोः पर्याप्तेत्येवंरीत्यैवोपपादनीयम्; तावतापि अखण्डस्य शुद्धवह्नित्वादेर्हेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकत्वमुपपद्यते, धर्मान्तरोपलक्षितवह्नित्वाद्यवच्छिन्नाभावस्य धूमादिमत्यवृत्तेर्विशिष्टवह्नित्वाद्यवच्छिन्नाभावप्रतियोगितावच्छेदकतायाश्च विशेषणान्तर्भावेनैव पर्याप्तेः तत्त्वोपलक्षितदण्डावच्छिन्नप्रतियोगिताकहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकता च तत्त्वावच्छिन्ना शुद्धविशेष्य एव पर्याप्ता साध्यतावच्छेदकताघटकशुद्धसंयोगादिसम्बन्धावच्छिन्नाचेति तादृशसम्बन्धेन दण्डादेस्तादृशाभावप्रतियोगितानवच्छेदकत्वं दुरुपपादमिति सामञ्जस्यमिति वदन्ति ।

वस्तुतो गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वे पारिभाषिकावच्छेदकत्वं निवेशनीयम्, तच्छरीरे यादृशं स्वं निविष्टं तादृशधर्मभेदनिवेशे वह्नित्वादौ विशिष्टवह्नित्वादिभेदासत्त्वेन तादृशधर्माविषयकप्रतीतिविषयत्वं निवेशनीयमिति गौरवम्. अतः प्रतियोगितावच्छेदकं यादृशयादृशरूपं स्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकतत्कत्वरूपं तत्तदतिरिक्तवृत्तित्वमेवानवच्छेदकान्तेन विवक्षणीयम्, तथाच सर्वासामेव दण्डादिव्यक्तीनां हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकतया कस्याश्चिदपि दण्डादिव्यक्तेः न यावत्प्रतियोगितावच्छेदकातिरिक्तवृत्तित्वम्, स्वस्य स्वातिरिक्तवृत्तित्वविरहादित्यखण्डधर्मस्य व्यापकतावच्छेदकतयाऽनुसरणम् । एतच्च एकोक्त्यभिप्रायेण यथाश्रुतमूललक्षणमुपपादयितुं सार्वभौमप्रभृतिमतमनुसृत्य; एकोक्त्यनादरेत्वनुगतरूपेण नानाव्यक्तिविधेयतावच्छेदककानुमित्यौपयिकव्याप्तिर्यद्रूपावच्छिन्नमनवच्छेदकम्, यद्रूपं वाऽवच्छेदकतानवच्छेदकं तद्रूपविशिष्टावच्छिन्नसामानाधिकरण्यं तद्रूपविशिष्टावच्छिन्ननिरूपिता व्याप्तिरित्येवंरीत्या निर्वचनीया; तथा सति दण्डिसंयोगादिहेतुकापि दण्डिमानयमित्याकारकानुमितिविशेषदर्शिनामपि

[दी] इत्थंच इदं द्रव्यं गुणकर्मान्यत्वे सति सत्त्वादित्यादौ सत्ताधिकरणगुणादिनिष्ठात्यन्ताभावप्रतियोगित्वेऽपि द्रव्यत्वादेर्नाव्याप्तिः साधनस्य विशिष्टसत्त्वादेर्गुणाद्यवृत्तेः ।

---

निर्वहति । एवमेकोक्त्या प्रतियोगिताधर्मिकोभयाभावघटिताया ग्रन्थकृता स्वयमुपदर्शनीयाया व्याप्तेरपि दण्डत्वादिविशिष्टदण्डाद्यवच्छिन्ननिरूपितत्वानिर्वाहः, हेतुसमानाधिकरणविशेषाभावप्रतियोगितायां दण्डत्वपृथिवीत्वव्याप्यजातित्वादिविशिष्टावच्छेद्यत्वाभावस्याऽव्याहतत्वाद्द्रव्यादिसामान्याभावप्रतियोगितायामेव तद्धर्मविशिष्टनिरूपितविलक्षणावच्छेद्यत्वसत्त्वादिति ध्येयम् ।

इत्थंचेति । हेतुतावच्छेदकोपलक्षितहेतुसामानाधिकरण्यसाधारणरूपमुपेक्ष्य विशिष्टसामानाधिकरण्यत्वेन सामानाधिकरण्यनिवेशनेचेत्यर्थः । नाव्याप्तिरिति । न विशिष्टसत्तात्वरूपहेतुतावच्छेदकविशिष्टवैशिष्ट्यावगाहिज्ञानजन्यानुमित्यौपयिकव्याप्त्यनिर्वाह इत्यर्थः । तेन विशिष्टसत्तात्वाद्युपलक्षितहेतुमत्ताज्ञानजन्यानुमित्यौपयिकव्याप्तौ उपलक्षितहेतुसामानाधिकरण्यमेव निविष्टमिति लभ्यते; अतो द्रव्यत्वाद्यभावे तादृशहेतुसामानाधिकरण्यसत्त्वात्तादृशहेतौ न द्रव्यत्वादेर्व्याप्तिरित्यभ्रान्तानां गुणादौ विशिष्टसत्तात्वाद्युपलक्षितहेतुमत्ताज्ञानसम्भवेऽपि न तत्र द्रव्यत्वाद्यनुमित्यापत्तिः; यत्र घटपटवृत्तिसंयोगत्वादिना हेतुता घटपटाद्यन्यतरत्वं साध्यं तत्रोभयवृत्तित्वविशिष्टाधिकरणाप्रसिद्ध्या हेतुतावच्छेदकोपलक्षितहेतुसामानाधिकरण्यगर्भव्याप्त्यन्तरमवश्यं स्वीकरणीयम्, अन्यथा तद्धेतुकतत्साध्यकानुमित्युच्छेदप्रसङ्गात्; ईदृशव्याप्त्यन्तरानभ्युपगमे सादृश्यहेतुकानुमितिरप्युच्छिद्येत, तद्भेदसामानाधिकरण्यसाहित्तद्वृत्तिधर्मत्वरूपसादृश्यत्वविशिष्टाधिकरणाप्रसिद्ध्या विशिष्टाधिकरणतागर्भव्याप्त्यसम्भवात्।

अथैवं विशिष्टवैशिष्ट्यावगाहिज्ञाने विशिष्टनिरूपितसमवायस्य सम्बन्धतया तेन सम्बन्धेन व्याप्तिः हेतुतावच्छेदकसम्बन्धेन हेतुमत्त्व स्वाऽंशे विवक्षणीयतयैव निर्वहतीति कथमत्र विशिष्टपदोपादानम् ?; नच विशिष्टवैशिष्ट्यबोधे विशिष्टनिरूपितसमवायत्वादिना न विशेषण सम्बन्धता, अपि तु शुद्ध एव समवायादिर्विशेषणसम्बन्धः, स्वाविशिष्ट रूपितसमवायादिस्तु विशेषणतावच्छेदकसम्बन्ध इति मताभिप्रायेणेदम ; तथाचोक्तस्थलेपि हेतुतावच्छेदकसम्बन्धः शुद्धसमवाय एवेति हेतुता वच्छेदकसम्बन्धमात्रविवक्षया न प्रतीकार इति वाच्यम् ; हेतुता वच्छेदकविशिष्टवैशिष्ट्यावगाहिज्ञाने हेतुतावच्छेदकस्य पक्षे परम्परा सम्बन्धेन भाननियमेन व्यापकताशरीरघटकाभावाधिकरणेपि तदीयतादृश सम्बन्धस्य निवेशितत्वात्तत एव हेतुतः पक्षे साध्यानुमितिनिर्वाहे विशिष्टसत्तात्वेन सत्तादेर्द्रव्यत्वादिव्याप्तिस्वीकारस्य निरर्थकतापातात् . नच दर्शितरीत्या विशिष्टव्यापकताग्रहस्य विशेषणव्यापकतावगाहित्वेपि विशिष्ट पक्षधर्मताग्रहस्य विशेषणे तदवगाहित्वेपि च विशिष्टहेतुकपरामर्शस्य विशेषणे साध्यसामानाधिकरण्यावगाहित्वाऽनियमान्न विशेषणहेतुकानुमिति सामग्र्या विशिष्टहेतुकानुमितिपूर्वमावश्यकतेति वाच्यम् ; साध्ये विशिष्ट हेतोर्व्यापकताग्रहेपि विशिष्टहेतौ साध्यविरोधग्रहसत्त्वेऽनुमित्यनुत्पत्त्या विशिष्टहेतुकस्थले विशिष्टाधिकरणत्वघटितहेतुसाध्यसामानाधिकरण्यविषयकस्यैव परामर्शस्याऽनुमितिहेतुता वाच्या, अन्यथा विरोधस्य जनक ज्ञानाविरोधितया हेत्वाभासत्वस्य दुर्घटताप्रसङ्गादिति तथाच साध्य वति विशिष्टहेत्वधिकरणत्वभाने च विशेषणस्य परम्परासम्बन्धस्यापि तत्र भाननियमेन विशिष्टहेतुकपरामर्शस्य नियमतो विशेषणेपि साध्य सामानाधिकरण्यावगाहित्वात् ; — मैवम् ; विशिष्टनिरूपितव्यापकता शरीरे विशेषणस्य धर्मिपारतन्त्र्येणैव विशिष्टाधिकरणविशेषणतया

प्रवेशः, न तु स्वातन्त्र्येण; तथाच तद्ग्रहे न विशेषणव्यापकतावगाहित्वनियमो निर्वहति, विशेषणनिरूपितव्यापकतायाः तद्वन्निष्ठाभावप्रतियोगितावच्छेदकत्वत्वपर्याप्तप्रतियोगितावच्छेदकताकाभावघटितत्वात् . विशिष्टवन्निष्ठाभावप्रतियोगितावच्छेदकत्वरूपप्रतियोग्युपरागेणाऽभावभाने च विशिष्टवत्त्वान्तर्गतविशेष्यवत्त्वपरित्यागेन विशेषणवन्निष्ठाभावप्रतियोगितावच्छेदकत्वत्वे प्रतियोगितावच्छेदकत्वपर्याप्तिभानासम्भवात्, अभावप्रतियोगिप्रकारघटकस्य उपलक्षणतया भानानुपगमात् । नच परम्परासम्बन्धेन विशेषणनिष्ठव्याप्तत्वावगाहिपरामर्शनिष्ठकारणताया उभयवादिसिद्धत्वात् विशिष्टहेतुकपरामर्शान्तरकारणत्वाकल्पनप्रयुक्तलाघवानुरोधेन वैशिष्ट्यस्य व्याप्तिग्रहस्थलेऽधिकरणे स्वातन्त्र्येण विशेषणवत्त्वभानमुपगम्य विशेषणेपि व्याप्तिभानं कल्पनीयमिति वाच्यम्; शब्दाधीनवैशिष्टवत्त्वगर्भव्याप्तिग्रहे स्वातन्त्र्येण विशेषणवत्त्वगर्भव्याप्तिभानाऽनियमात्, तादृशव्याप्तिबोधकशब्दस्य स्वातन्त्र्येण विशेषणवत्त्वाऽभासकत्वात्।

अथ तत्र तदुत्तरं विशेषणे मानसव्याप्तिग्रह एवानुमित्यर्थं कल्प्यते, तत्कारणतायाः क्लृप्तत्वादिति चेन्न; एवं सति दण्डाद्युपलक्षितधर्मिहेतुकानुमितेर्विलयप्रसङ्गात्, तद्धेतुकव्याप्तिग्रहस्थले परम्परासम्बन्धेनोपस्थितदण्डादौ व्याप्तिग्रहस्य कल्पनसम्भवात्, स्वातन्त्र्येण सकलपरम्परासम्बन्धघटितसकलविशेषणवत्त्वग्रहस्याऽप्रामाणिकतया विशेषणहेतुकपरामर्शस्य कारणतायाः क्लृप्तत्वानियमाच्च । ननु वह्निसंयोगिसंयोगाद्यात्मकसाध्यसामानाधिकरण्यस्य व्याप्तित्वे एकैव हि सा व्याप्तिरिति मूलग्रन्थविरोधः, महानसपर्वतादिनिष्ठधूमादिगतवह्निसंयोगिसंयो-

[दी] सामानाधिकरण्यव्यक्तीनां भेदेपि निरूपकतावच्छेदकस्या ऽधिकरणतावच्छेदकस्य चैक्याद्व्याप्त्यैक्यम् । वस्तुतस्तु – धूमत्व विशिष्टव्यापकवह्निसामानाधिकरण्यस्य रासभादिसाधारण्यात्

---

गादेरैक्यासम्भवादित्यत आह— **सामानाधिकरण्यव्यक्तीना** मिति । **भेदेपी** ति । अधिकरणभेदेन धूमादिभेदेनचेत्यादिः । **निरूपकतावच्छेदकम्**—वह्नित्वादिरूपसाध्यतावच्छेदकम् । **अधिकरणतावच्छेदकम्**-धूमत्वादिरूपहेतुतावच्छेदकम् । **तदैक्यात्**— साध्यहेतुभेदेप्यभेदात् तदभेदतात्पर्येणैक्यम् , भाक्त एकत्वव्यवहारः । ननु लक्षणया व्यवहारसमर्थनमसङ्गतम् , सामान्यप्रत्यासत्त्यभावपक्षे विशिष्टपरामर्शनिर्वाहार्थं व्याप्त्यैक्यकथनात् , तन्निर्वाहस्य च सामानाधिकरण्यस्य व्याप्तित्वे धूमत्वादेरैक्येपि पक्षीयधूमादिनिष्ठसामानाधिकरण्यस्य सामान्यप्रत्यासत्तिं विना पूर्वं ग्रहासम्भवेन तत्स्मरणासम्भवात् , पक्षीयधूमे तदुपनयाऽसम्भवेनाऽयोगात् ; अतोऽतिप्रसङ्गेन च धूमादिव्यापकवह्न्यादिसामानाधिकरण्यमात्रस्य व्याप्तित्वासम्भवात् धूमत्वादिरूपहेतुतावच्छेदकस्य द्विधा व्याप्तिशरीरप्रवेशस्यावश्यकत्वं दर्शयन् व्याप्तेर्भेदमभेदं च दर्शयति— **वस्तुतस्त्वित्यादिना** । प्रथमपक्षप्रदर्शनं तत्पक्षे धूमत्वत्वाद्यप्रवेशाल्लाघवेन सामान्यप्रत्यासत्तिपक्षे तज्ज्ञानस्यैवानुमितिहेतुत्वमिति सूचनाय । **रासभादिसाधारण्या** दिति । तत्साधारण्ये च भ्रमं विनापि रासभादिलिङ्गकवह्न्याद्यनुमानापत्तिरिति भावः ।

अथ व्यापकताप्रविष्टहेतुतावच्छेदकधर्मितावच्छेदकसामानाधिकरण्यप्रकारकज्ञानस्यैवाऽनुमितिहेतुत्वोपगमान्नायमतिप्रसङ्गः , धूमत्वादिप्रकारेण भासमाने रासभादौ साध्यसामानाधिकरण्यग्रहस्य धूमत्वाद्यंशे भ्रम-

त्वानियमात् ; वक्ष्यमाणधूमत्वादिगनिष्ठवह्न्यादिसामानाधिकरण्यस्य व्याप्तित्वेपि तद्धर्मितावच्छेदकतापन्नहेतुतावच्छेदकाविशिष्टवत्ताज्ञानस्य हेतुताया अवश्योपेयत्वात् ; अन्यथा विशिष्टसत्तादिव्यापकद्रव्यत्वादिनिरूपितविशिष्टसत्तादिनिष्ठसामानाधिकरण्योपलक्षितवत्ताज्ञानाद्गुणरूपपक्षे ऽभ्रान्तस्य द्रव्यत्वाद्यनुमानापत्तेः, साध्यसामानाधिकरण्यविशिष्टवत्त्वस्य पक्षे साध्यनिश्चयं विना दुर्निश्चेयतया तदुपलक्षितवत्तानिश्चयस्याप्यनुमितिहेतुताया उपगन्तव्यत्वात् , केवलसामानाधिकरण्यप्रकारेण पक्षधर्मताज्ञानस्याऽनुमितिहेतुत्वे धूमाभाववान् पक्ष इत्यासिद्धिग्रहदशायामपि साध्ये धूमादिव्यापकताज्ञानादप्यनुमित्यापत्तेश्च, असमानप्रकारतया धूमाभाववान् पक्ष इत्यादिबुद्धेः धूमादिवृत्तिसामानाधिकरण्यवद्वान् पक्ष इत्यादिज्ञानाऽविरोधित्वादिति चेत् ? सत्यम् ; धूमत्वादिमाति सामानाधिकरण्यमित्यस्य धूमत्वादिविशिष्टविशेषणतापन्नं सामानाधिकरण्यमित्यर्थः, न तु धूमादिवृत्तित्वविशेषितं सामानाधिकरण्यमिति; तथाच एकधर्मिविशेषणतापन्नधूमत्वादिरूपहेतुतावच्छेदकसामानाधिकरण्योभयं व्याप्तिरिति पर्यवसितम् । कारणं च धूमव्यापकवह्निसमानाधिकरणधूमवान् पर्वत इत्यादिरेव परामर्शः; तावतैवोक्तोभयस्य हेतुविशेषणतयाऽनुमितिजनकज्ञानविषयत्वरूपव्याप्तित्वनिर्वाहः । द्वितीयपक्षे च धूमव्यापकवह्निसमानाधिकरणवृत्तिधूमत्ववद्धूमवान् पर्वत इति ज्ञानं हेतुः, न तु स्वरूपतो धूमत्वाप्रकारकं तादृशधूमत्ववद्वान् पक्ष इत्याकारकम् ; तादृशज्ञानस्य धूमाभाववान् पक्ष इत्याकारकधूमत्वत्वाद्यप्रकारकासिद्धिज्ञानाऽप्रतिबध्यत्वात्

एतन्मते च हेतुतावच्छेदकवृत्त्यसाधारणधर्मावच्छिन्ने साध्यसमानाधिकरणावृत्तित्वमेव विरोधः, न तु हेतुतावच्छेदकावच्छिन्ने साध्यासामानाधिकरण्यम् ; उपदर्शितज्ञानस्य हेतुतावच्छेदकं धर्मितावच्छेदकीकृत्य साध्यसामानाधिकरण्यानवगाहितया तथाविधविरोधज्ञानाप्रतिबध्यत्वात् ।

[द] धूमत्वादिमति तादृशसामानाधिकरण्यं तद्वति धूमत्वादिकं वा व्याप्तिः । आद्या भिन्ना, द्वितीयात्वभिन्नेति ध्येयम् ।

---

यदि विरोधस्यानुमितिं प्रति साक्षाद्विरोधितया हेत्वाभासत्वमुपपादयितुं शक्यते? तदा समानाधिकरणवृत्तित्वांशे निर्धर्मितावच्छेदकं समानाधिकरणवृत्तिमद्धूमवान् पर्वत इत्येतादृशमपि ज्ञानं हेतुरुपेयते, अन्यथा धूमत्वत्वादिविषयतायाः कारणतावच्छेदककुक्षौ प्रवेशे गौरवात्, सामानाधिकरण्यप्रकारकत्वापेक्षया समानाधिकरणवृत्तिप्रकारकत्वस्य गुरुत्वेपि सामान्यप्रत्यासत्त्यसत्त्वे विशिष्टपरामर्शनिर्वाहानुरोधेन तेन रूपेण हेतुताया अवश्योपगमात् ।

( केचित्तु— धूमव्यापकवह्निसमानाधिकरणधूमीयवद्धूमवान् पर्वत इत्याकारकज्ञानमेवाऽनुमितिहेतुः, यथाश्रुतस्य हेतुतावच्छेदकावच्छिन्ने साध्यसामानाधिकरण्याभावरूपस्य विरोधस्य हेत्वाभासत्वेन धूमीयत्वेनैव धूमत्वप्रवेशेन च लाघवसत्त्वात्; तथाच विशिष्याधेयतासम्बन्धेन धूमप्रकारतनिरूपितधूमत्वप्रकारतानिरूपितधूमप्रकारतानिरूपकनिश्चयत्वेनैव हेतुत्वम् तेन द्रव्यत्वादिव्युदास इत्याहुः । )

**आद्या** — हेतुतावच्छेदकधर्मसहितसाध्यसामानाधिकरण्यरूपा **भिन्ने** ति । प्रतिधूमादिकमित्यादिः । **द्वितीया** – साध्यसमानाधिकरणवृत्तिहेतुतावच्छेदकरूपा । **अभिन्ना**— सर्वधूमादिसाधारणी अनुगतरूपवच्छिन्ननानाव्यक्तिदण्डादिविशिष्टहेतुकस्थलेपि परम्परासम्बद्धदण्डत्वाद्यखण्डधर्म एव हेतुतावच्छेदकतयोपगन्तव्य इति भावः । यद्यपि साध्यसामानाधिकरण्यावच्छेदकरूपवक्ष्यमाणव्याप्त्यभिप्रायेणापि **एकैवइ** त्यादिग्रन्थः सङ्गच्छते, तथापि स्वयं तत्र स्वरूपसम्बन्धरूपावच्छेद

[दी] अयं 'कपिसंयोग्यतद्वृक्षत्वा' दित्यादिसङ्ग्रहायाऽसमानाधिकरणान्तम् ।

---

कत्वप्रवेशनस्य खण्डनीयतया स्वविशिष्टाधिकरणावृत्तियावत्साध्यासमानाधिकरणकत्वरूपपारिभाषिकावच्छेदकत्वस्यैव विवक्षणीयतया एतदपेक्षया तादृशी व्याप्तिर्गुरुशरीरेति कथंचिदीदृशव्याप्तेरैक्योपपत्तिसम्भवेन तज्ज्ञानमनुमितिहेतुरित्येतादृशव्याप्तेरैक्यमुपपादितम् ।

मिश्रादिमतमवलम्ब्य प्रतियोग्यसमानाधिकरणपदप्रयोजनमाह — **अयं कपिसंयोगीति** ।

अथैतद्वृक्षत्वादेरव्याप्यवृत्तिकपिसंयोगादिव्याप्यत्वोपगमेपि संयोगाद्यनवच्छेदकमूलादेः पक्षतावच्छेदकत्वे तदवच्छेदेनापि एतद्वृक्षादौ कपिसंयोगादेः सिद्धिप्रसङ्गः; नचेष्टापत्तिः; सलिंगपरामर्शस्य भ्रमानुमित्यजनकत्वनियमात्. नच तदवच्छेदेन हेतुमत्ताज्ञानस्य तदवच्छेदेन साध्यानुमितिहेतुत्वादेतद्वृक्षत्वादिरूपव्याप्यवृत्तिहेतोश्च किञ्चिदवच्छेदेनावृत्तेर्नातिप्रसङ्ग इति वाच्यम्; यदि स्वरूपसम्बन्धरूपावच्छेदकत्वावगाहिन्यामनुमितावपि तादृशहेतुमत्ताज्ञानत्वेन हेतुत्वमुपेयते ? तदापि तुल्ययुक्त्या एतद्वृक्षत्वादेरिव मूलाद्यवच्छिन्नसंयोगादिविशेषस्यापि कपिसंयोगादिव्याप्यतया तेन हेतुना मूलाद्यवच्छेदेन कपिसंयोगाद्यनुमितेर्निष्प्रत्यूहत्वादिति चेत्;

अत्रोपाध्यायाः;– साध्यस्य पक्षतावच्छेदकसामानाधिकरण्यं विना व्याप्यस्य पक्षधर्मत्वमनुपपन्नमिति पक्षधर्मताबलात्पक्षतावच्छेदकसामानाधिकरण्यमेव साध्ये सिद्ध्यति, न तु तदवच्छेद्यत्वमपि, प्रमाणाभावादिति तादृशानुमितेरप्रामाणिकतया तत्र परामर्शहेतुताकल्पनमेव नास्तीति न तदापत्तिरिति समादधिरे ।

[दी] यत्तु– 'इदं संयोगि द्रव्यत्वा' दित्यादावव्याप्तिवारणाय तत्, संयोगस्य शाखाद्यवच्छेदेन वृत्तेः, वृक्षत्वावच्छेदेन सामान्याभाववृत्तौ बाधकाभावात् तत्र च अतीन्द्रियस्यापि संयोगस्य सत्त्वात्परित:

---

मिश्रादयस्तु – बाधानवतारे मूलाद्यवच्छेदेन कपिसंयोगादिसिद्धिरिष्टैवेति वदन्ति। एतत्तत्त्वं ग्रन्थकृता हेत्वाभासे वक्ष्यते ।

प्राचीनसिद्धव्याप्तिस्थलं दूषयितुमुपन्यस्यति – **यत्त्वि** ति । **तत्** – असमानाधिकरणान्तम् । ननु द्रव्ये संयोगत्वावच्छिन्नाभावसत्त्व एव अवच्छेदकगर्भोक्तलक्षणाव्याप्तिः प्रसज्यते, तदेव न; वृक्षादौ संयोगानवच्छेदकभागाप्रसिद्ध्या तत्सामान्याभावावच्छेदकस्य दुर्लभत्वादित्यत आह—**संयोगस्ये** ति । **वृक्षत्वावच्छेदेने** ति । वृक्षत्वादेः प्रत्येकं सकलसंयोगातिप्रसक्तत्वात्, तस्य संयोगावच्छेदकत्वासम्भवात् आकाशादिसंयोगस्यापि यावद्वृक्षवृत्तेरेकस्याभावाद्वृक्षत्वे तत्संयोगानतिप्रसक्तत्वासम्भवादिति भावः ।

ननु वृक्षत्वावच्छेदेन वृक्षादौ संयोगसामान्याभावसत्त्वे वृक्षे संयोगो नास्तीत्यादिप्रत्यक्षापत्तिरित्यत आह—**तत्रचे** ति । **अतीन्द्रियस्ये** ति । अतीन्द्रियप्रतियोगितया संयोगसामान्याभावस्याऽतीन्द्रियत्वमिति भावः ।

ननु संयोगसामान्याभावस्य वृक्षे सत्त्वे महत्त्वोद्भूतरूपवन्मात्रसमवेतसंयोगसामान्याभावोप्यावश्यकः, तद्व्याप्यधर्मावच्छिन्नाभावस्य तद्धर्मावच्छिन्नाभावनियतत्वादिति योग्यमात्रप्रतियोगिकोयमभावः कथं न वृक्षे साक्षात्क्रियत इत्यत आह—**परित** इति । यद्वा प्रतियोगितावच्छेदकयोग्यत्वस्य तन्त्रत्वेवत्वाह—**परित** इति । प्रतियोग्युपलब्धेर्विभिन्नावच्छेदे

[दी] प्रतियोग्युपलब्धेर्दोषाद्वा वृक्षे न संयोग इत्यादि नाध्यक्षमिति; तन्न; द्रव्ये संयोगसामान्याभावे मानाभावात् ।

---

अभावग्रहं प्रति विरोधिज्ञानमुद्रया प्रतिबन्धकत्वं न सम्भवतीति तस्य दोषत्वकथनं दोषविधया प्रतिबन्धकत्वलाभाय ।

अथ यत्र संयोगाविषयकमेव उपनीतभानात्मकं वृक्षादि रूपाधिकरणज्ञानं तदग्रिमक्षणे वृक्षादौ तादृशसंयोगसामान्याभावग्रह प्रसङ्गः, तादृशदोषस्य प्रागसत्त्वात्. एवं वृक्षे न संयोग इत्यादि लौकिकप्रत्यक्षस्याऽळीकतया तत्र तादृशप्रतिबन्धकत्वकल्पनमेवाऽशक्य मिति चेन्न; वृक्षादौ संयोगसामान्याभावलौकिकप्रत्यक्षस्याऽप्रसिद्धत्वेपि गुणादौ तत्प्रसिद्ध्याऽधिकरणीयविषयतासम्बन्धेनाऽभावलौकिकत्वावच्छिन्नं प्रति स्वविषयसंयोगवत्त्वसम्बन्धेन प्रत्यक्षत्वेन प्रतिबन्धकत्वकल्पनात्, सर्वत्र द्रव्येऽन्तत ईश्वरीयप्रत्यक्षस्यैव सर्वदा तादृशसम्बन्धेन सत्त्वेना ऽतिप्रसङ्गविरहात् ।

इदमापाततः ;— द्रव्यरूपाधिकरणविषयकसंयोगाभावविषयकप्रत्य क्षस्य कदाचिदप्यनुदयेन तादृशप्रत्यक्षसामग्र्या एवाऽकल्पनेन आपा दकाभावादेवाऽतिप्रसङ्गवारणसम्भवेन तादृशप्रतिबन्धकताकल्पनस्यायुक्त त्वात्; कथंचिदापत्तिसम्भवेपि तादात्म्यसम्बन्धेन द्रव्यत्वेनैव तादृश सम्बन्धेन संयोगाभावलौकिकप्रत्यक्षं प्रति प्रतिबन्धकत्वौचित्यात् ।

**मानाभावा** दिति । लौकिकप्रत्यक्षस्य योग्यानुपलब्धिविरहेणाऽसम्भवा दुपनीतभानस्य संयोगाभावो वृक्षावृत्तिरित्याकारकविपरीतविषयकस्याप्युपनय वशेनकल्पनसम्भवात् विनिगमनाविरहेणैकतरस्य प्रामाण्यासिद्धेः, शब्दस्या ऽऽप्तोक्तत्वासिद्ध्या तदव्यवस्थापकत्वात्, अनुमानस्य च लिङ्गाभावेनाऽसम्भवा दितिभावः । ननु वृक्षादौ यावत्संयोगविशेषाभावानामुभयसिद्धतया तत

[दी] नच यो यदीययावद्विशेषाभाववान् स तत्सामान्याभाववानिति व्याप्तेः

---

एव हेतोस्तत्राप्रत्यक्षस्यापि तत्सामान्याभावस्य सिद्धिर्निष्प्रत्यूहैवेति शङ्कां निरस्यति – **नचे** त्यादिना । यः संयोगीययावद्विशेषाभाववान् स संयोगसामान्याभाववानिति व्याप्तेरेवाऽग्रे व्यर्थविशेषणत्वाप्रयोजकत्वादि दोषेण निराकरणीयतया प्रथमतस्सामान्यमुखीं व्याप्तिं अनुमानोपष्टम्भकतया दर्शयति—**यो यदीये** ति । यद्धर्माश्रयस्य यावद्विशेषा भाववान् य स्स तद्धर्मावच्छिन्नाभाववानित्यर्थः । संयोगत्वाश्रयस्य विशेषधर्मावच्छिन्नाभावकूटं वृक्षादौ वर्तत इति तत्रोक्तव्याप्तेस्संयोगत्वावच्छिन्नाभावसिद्धिः । प्रतियोगिनोर्यत्त्वतत्त्वेन निवेशे संयोगवृत्ति कपिसंयोगत्वादिरूपसामान्यधर्मावच्छिन्नाभावमादाय सिद्धसाधनं स्यादिति धर्मस्य यत्त्वतत्त्वेनोपादानम् । संयोगादिसम्बन्धावच्छिन्नसंयोगत्वावच्छिन्नाभावमादाय सिद्धसाधनवारणाय समवायसम्बन्धावच्छिन्नाभाव एव साधनीयः; अन्यसम्बन्धावच्छिन्नविशेषाभावकूटस्य तत्सम्बन्धावच्छिन्न सामान्याभावव्यभिचारित्वे समवायसम्बन्धावच्छिन्नविशेषाभावकूटस्यापि तत्सम्बन्धावच्छिन्नसामान्याभावव्यभिचारित्वं तुल्यन्यायेन सम्भाव्येतेति प्रतियोगितावच्छेदकसम्बन्धानामपि यत्त्वतत्त्वेन व्याप्तावन्तर्भावः; अत एव समवायसम्बन्धावच्छिन्नयावद्विशेषाभावहेतुना तत्सम्बन्धावच्छिन्न संयोगसामान्याभावसिद्धिः । यद्धर्माश्रयविशेषाभावश्च उभयावृत्तियद्धर्म समानाधिकरणधर्मावच्छिन्नाभावः; × अतस्संयोगत्वाद्यपेक्षया वृक्षवृत्तिसंयोगत्वादेर्विशेषधर्मत्वेपि संयोगसामान्याभावं वृक्षादावनभ्युपगच्छतामवयव विशेषरूपावच्छेदकदुर्भिक्षेण वृक्षवृत्तिसंयोगत्वावच्छिन्नाभावस्य वृक्षादावनभ्युपगमेपि च न सान्दिग्धासिद्धिः, वृक्षवृत्तिसंयोगत्वादीनामुभयवृत्तित्वेन तदवच्छिन्नाभावव्यावृत्तेः । नच हेतावुभयावृत्तित्वविशेषणस्याऽसिद्धि-

वारकत्वेपि व्यभिचाराऽवारकतया वैयर्थ्यम्. यावत्त्वस्य धीविशेषविष यत्वरूपस्य परिचायकमेव तादृशधर्मावच्छिन्नप्रतियोगिताकत्वम् , न तु हेतुप्रविष्टमिति तु न सत् , तथा सति यत्तत्पदार्थस्य हेतुसाध्यशरीरा प्रवेशेन सामान्यव्याप्तित्वानुपपत्तेरिति वाच्यम् , यावत्पदस्य व्यापक त्वार्थकतया तद्धर्मसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नाभावत्वनिरूपिता आधेयत्वसम्बन्धावच्छिन्नव्यापकताया एव हेतुतया विशेषधर्मव्यापकत्वा घटकाभावान्तरस्यैव च सामान्यधर्मव्यापकताघटकतया वैयर्थ्यानवकाशात् । नच तादृशाभावत्वव्यापकत्वं तादृशाभावत्ववन्निष्ठभेदप्रतियोगितायामाधेयता सम्बन्धेनानवच्छेदकत्वम् , एवंच संयोगविशेषाभावानां सर्वेषामेव सर्वा धिकरणवृत्तितया तन्निष्ठभेदप्रतियोगितायां आधेयतासम्बन्धेनावच्छेदक मधिकरणमप्रसिद्धमिति तदनवच्छेदकत्वरूपहेत्वप्रसिद्धिरिति वाच्यम् , आधेयतासम्बन्धावच्छिन्नावच्छेदकतासम्बन्धेन प्रतियोगिताया अभावस्यैव प्रतियोगितानवच्छेदकत्वस्थाने निवेशनीयत्वात् , उक्तस्थले व्यधिकर णतादृशसम्बन्धावच्छिन्नाभावप्रसिद्धिसौलभ्यात् । यद्धर्मसमानाधिकरणेत्यत्र प्रतियोगितावच्छेदकत्वेन धर्मो विशेषणीयः; तेन कम्बुग्रीवादिमत्त्वादि व्याप्यधर्मावच्छिन्नप्रतियोगिताकयावदभाववतः तद्धर्मावच्छिन्नाभावाप्रसि- द्ध्या तादृशाभाववत्त्वासम्भवेपि न क्षतिः । नच भेदप्रतियोगिताव च्छेदकवाच्यत्वघटाद्यन्यतरत्वादिव्याप्यधर्मावच्छिन्नसंयोगादिसम्बन्धावच्छि न्नप्रतियोगिताकयावदभाववतः तद्रूपावच्छिन्नप्रतियोगिताकाभाववत्त्वासम्भ वात् व्यभिचारः, वाच्यत्वादेः संयोगादिनाऽवृत्तित्वात्तेन सम्बन्धेन घटादेरेव तादृशाभावविरोधितया घटत्वादेरेव तत्प्रतियोगितावच्छेदकत्व सम्भवेन गुरोरन्यतरत्वस्य तत्प्रतियोगितानवच्छेदकत्वादिति वाच्यम् ; वाच्यत्वादिसाधारणस्याऽन्यतरनिष्ठप्रतियोगित्वस्य न्यूनवृत्तिघटत्वादिना ऽनवच्छेदात् , अगत्या गुरुणाऽन्यतरत्वादिनैव तदवच्छेदात । वस्तुतो

यत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य साध्यहेतुघटकता तत्सम्बन्धावच्छिन्नप्रतियोगितावच्छेदकत्वेनैव सामान्यधर्मस्य विशेषणीयतया उक्तसामान्यधर्मस्य भेदप्रतियोगितावच्छेदकत्वेपि संयोगादिसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकतया तत्सम्बन्धावच्छिन्नतदवच्छिन्नाभावाऽप्रसिद्धावपि न व्यभिचारः; अत एव भेदप्रतियोगितावच्छेदकजातित्वादिघटकनित्यत्वादेस्समवायसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकगर्भे निवेशस्य गौरवेणाऽसम्भवेपि न जातित्वादिसामान्यधर्मघटितहेतोर्व्यभिचारितया सामान्यव्याप्तिभङ्गः ।

---

वस्तुतस्तु ; – यद्धर्मे प्रतियोगितावच्छेदकत्वविशेषणमनुपादेयमेव, कम्बुग्रीवादिमत्त्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नाभावनिष्ठभेदप्रतियोगितात्वस्य घटत्वादिघटिततादृशधर्मापेक्षया गुरुतया तदवच्छिन्नाभावरूपव्यापकत्वाप्रसिद्धेः यद्धर्म इत्यनेन कम्बुग्रीवादिमत्त्वरूपगुरुधर्मोपादानस्य गुरुधर्मस्याऽभावप्रतियोगितानवच्छेदकत्वपक्षेऽसम्भवेन व्यभिचारानवकाशात् । अभावे यावत्त्वादिविशेषणप्रवेशाद्यत्किंचिज्जात्यादिव्यक्त्यभाववति जात्यादिसामान्याभावासत्त्वेपि न सामान्यव्याप्तिभङ्गः । यद्यपि यत्तदर्थघटितसाध्यहेतूनामननुगमेन नैका व्याप्तिरिति संयोगसामान्याभावतदीयविशेषाभावकूटयोर्व्याप्तौ यावत्त्वादिविशेषणवैयर्थ्यमेव, तथापि तद्दोषस्य वयमग्रे वाच्यतया यथाकथंचिच्छङ्कासङ्गतिः ।

अथ वृक्षादौ यावत्संयोगाभाववत्त्वमुभयवाद्यसिद्धम् , तत्र विभुसंयोगाभावावच्छेदकस्य अवयवविशेषस्य दिग्विशेषस्य वा दुर्वचत्वात् , ध्वंसप्रागभावयोरत्यन्ताभावविरोधित्वे कालविशेषावच्छेदेनापि तत्र तदभावासम्भवात् ; तयोस्तदविरोधितामते द्रव्ये संयोगसामान्याभावस्याद्युत्पत्तिकालावच्छेदेन वृत्तावविरोधात् । नच मूलाग्राद्यवच्छिन्नविभुसंयोगव्यक्तीनां भेदादग्रमूलाद्यवच्छेदेनाऽभावस्सुलभ इति वाच्यम् ;

तासां भेदस्याऽप्रामाणिकत्वात् । नच नानावयवावच्छिन्नसंयोगव्यक्ती नामभेदे तत्तत्संयोगव्यक्तौ तत्तदवच्छेदकव्यक्तीनां तादात्म्यसम्बन्धेन कारणतायां व्यभिचार इत्यवच्छेदकभेदेन संयोगभेद अवश्यकः, आवश्यकश्चाऽवच्छेदकव्यक्तीनां विशिष्य स्वावच्छिन्नसंयोगव्यक्तिषु हेतुताभ्युपगमः ; अन्यथा मूलादिमात्रावच्छिन्नमूर्तान्तरसंयोगानामग्राद्यवच्छेदेनैतद्वृक्षादिवृत्तिविभुसंयोगानां च वृक्षान्तरावयवावच्छेदेनाऽनुत्पत्तिप्रयोजकस्य दुर्लभत्वापातादिति वाच्यम् ; व्याप्यवृत्तेरवच्छेदकानभ्युपगमेन वृक्षादौ विभुसंयोगस्य व्याप्यवृत्तितया मूलाद्यवच्छिन्नत्वविरहेण तत्र मूलादीनां हेतुताविरहात् . व्याप्यवृत्तेरवच्छेदकोपगमे तत्तदवच्छेदकस्वरूपतत्तन्निष्ठावच्छेदकताव्यक्तीनामेव तत्तदवच्छेदकस्य जन्यतावच्छेदकसम्बन्धतया मूलाग्राद्यवच्छिन्न विभुसंयोगव्यक्तीनामभेदेपि व्यभिचारानवकाशात् ; अन्यथा मूलाद्यवच्छिन्नसंयोगस्य दिग्विशेषैरप्यवच्छिन्नतया तत्राऽवच्छेदकतासम्बन्धेन तत्तत्संयोगव्यक्तीनामुत्पत्त्या मूलादेस्तत्र व्यभिचारस्य दुर्वारत्वात् । नच मूलावच्छिन्नसंयोगानामग्रावच्छिन्नसंयोगादेरिव प्राच्याद्यवच्छिन्नसंयोगादेरपि भेदः स्वीकर्तुं शक्यते, मूले प्राच्यां शरीरवृक्षसंयोग इत्यादिप्रतीत्या एकसंयोगव्यक्तावेव मूलप्राच्याद्यवच्छिन्नत्वावगाहनात् . नचाऽग्रमूलयोश्शरीरसंयोग इत्यस्या इव तादृशप्रतीतेरपि संयोगद्वयावगाहित्वमस्मदनुमतमिति वाच्यम् ; यत्र मूलप्रतीचीमात्रावच्छिन्न एक श्शरीरसंयोगः अग्रप्राचीमात्रावच्छिन्नश्च शरीरान्तरसंयोगः तत्र मूले प्राच्यां शरीरसंयोग इति प्रत्ययापत्तेः, शरीरतरुसंयोगव्यक्तीनां एकैकासामेव शरीरावयवेन वृक्षावयवेन च अवच्छिन्नतया व्यभिचारस्यापि दर्शितसम्बन्धसङ्कोचमन्तरेण दुर्वारत्वाच्च । न हि तत्र शरीरावयवावच्छिन्नशरीरतरुसंयोगमूलावच्छिन्नतदुभयसंयोगयोः भेदसम्भवः, तथा सति मूलावच्छिन्नवृक्षसंयोगस्य शरीरे चरणावच्छिन्न शरीरसंयोगस्य वृक्षे व्याप्यवृत्तितया तत्र तदभावासत्त्वप्रसङ्गात्

तत्तदवच्छेदकावच्छिन्ननानासंयोगसाधारणं तत्तदवच्छेदकावच्छिन्नत्वमेव तत्तदवच्छेदकजन्यतावच्छेदकम्, न तु संयोगनिष्ठतत्तद्व्यक्तित्वम्, अनन्तकार्यकारणभावप्रसङ्गात्; तथाचैकावच्छेदकावच्छिन्नसंयोगस्य अपरावच्छेदकावच्छिन्नत्वेपि तदवच्छिन्नत्वविशिष्टस्य नान्यत्रोत्पत्तिरिति न व्यभिचारशङ्केत्यपि वदन्ति ।

यत्तु- संयोगमात्रस्याऽव्याप्यवृत्तितासिद्धान्तानुरोधेन मूलाग्रावच्छिन्न तरुविभुसंयोगादीनां भेदस्वीकार आवश्यक इति; तदपि न सम्यक्; तादृशसंयोगव्यक्तीनां गगनादौ दिग्विशेषरूपावच्छेदकनियमेनैव तादृश सिद्धान्तसङ्गतेः ।

अत्र वदन्ति;---

द्रव्यमात्र एव संयोगसामान्याभावस्याऽप्रामाणिकतायाः तन्ने त्यादि नोक्तेः **नचे** त्यादिना गगनादेरेव संयोगसामान्याभावसाधकमनुमानमाशङ्कितम्, विभुद्वयसंयोगानभ्युपगमेन तत्र यावत्संयोगव्यक्तीनामेव प्रति नियतदिग्विशेषावच्छिन्नतया तत्तद्व्यक्तित्वेन तत्र तदभावसत्त्वेऽविवादात् नाऽसिद्ध्यवकाशः, विभुमात्रे संयोगसामान्याभावसिद्धावपि संयोगि द्रव्यत्वादित्यादौ व्यावृत्तिसङ्गतेः. वृक्षादावेतद्व्याप्तिबलात्संयोगसामान्याभावाऽसिद्धावपि न क्षतिः, प्रतियोग्यनवच्छेदकस्य तदभावावच्छेदकत्वनियम सत्त्वे वृक्षत्वावच्छेदेन वृक्षादावपि संयोगसामान्याभावसिद्धेस्सम्भवेन तत्रापि तदभावं साधयतां तादृशनियमवादिनामाशङ्कां **नच प्रतियोग्यनवच्छेदकवृक्षत्वादेरभावावच्छेदकत्व** मित्यादिना निराकरिष्यति; पूर्वमपि वृक्षत्वावच्छेदेन संयोगसामान्याभाववृत्तिरविरोधमात्रेण प्रतियोग्यनवच्छेदकस्याभावावच्छेदकत्वनियमेन वा सेद्धुमर्हतीत्याशयेनैव वृक्षादौ संयोगतत्सामान्याभावयोर्वृत्ताववच्छेदकभेद उपपादितः, न तु "यो यदीये" त्यादिनियमस्य तत्साधकत्वाशयेनेति न सन्दर्भविरोध इति ।

[दी.] यावत्संयोगाभावा एव मानम् , यत्तदर्थयोरननुगमात् ;

---

यत्र यत्किञ्चिदवयवनाशान्महावृक्षनाशानन्तरं खण्डवृक्षोत्पत्ति स्तत्क्षणे पूर्वोत्पन्नक्रियातोऽवशिशतयावत्तदवयवैर्गगनादिसंयोगानां विनाशः, द्वितीयक्षणे च खण्डवृक्षस्यापरावयवनाशः, तृतीयक्षणे च तन्नाशः, तत्र वृक्षे विभुसंयोगानुत्पत्त्या यावद्विशेषाभावसौलभ्यम् । नचैवं तादृश वृक्षे मूर्तान्तरेणापि संयोगस्तदवयवसंयोगैस्तत्तत्कर्मणा वा न सम्भवति, तदवयववगगनादिसंयोगनाशककर्मणा मूर्तान्तरतदवयवसंयोगानामपि तदु त्पत्तिकाले विनाशात् ; अवयवावयविनोस्संयोगानभ्युपगमेन स्वावयव द्वयसंयोगेन संयोगजननासम्भवात् ; उत्पत्तिकाले च द्रव्ये गुणवत्कर्म सत्त्वानुपपत्तेरिति संयोगसाध्यके द्रव्यत्वस्य सद्धेतुतैव न निर्वहतीति वाच्यम् ; तादृशखण्डद्रव्ये तदवयवसंयोगजन्यस्य तत्कर्मजन्यस्य च संयोगस्याऽसम्भवेपि सर्वत्रैव सदागतिशीलपवनादिपरमाणूनां कर्मभिस्त- त्संयोगानामुत्पत्तौ बाधकविरहेण द्रव्यस्य संयुक्तत्वनियमादित्यपि केचित् ।

**यावत्संयोगाभावा एव मान** मिति । ज्ञायमानलिङ्गस्याऽनुमिति करणत्वमताभिप्रायेण । **यत्तदर्थयो** रिति । साध्यहेतुघटकयत्तच्छब्दा र्थयोस्संयोगत्वघटत्वाद्योरित्यर्थः । **अननुगमा** दिति । एकरूपेण निवेशा सम्भवादित्यर्थः । एकव्याप्तेर्निर्वाहयितुमशक्यत्वादिति शेषः ; तथाच घटत्वाद्यवच्छिन्नाभावघटादिविशेषाभावकूटयोर्व्याप्तेस्संयोगसमान्याभावसिद्धा वनुपयोगित्वाद्यावत्संयोगविशेषाभावे संयोगसामान्याभावेपि विशेषव्याप्तेश्चाऽग्रे निराकर्तव्यत्वात् नोक्तानुमानसम्भव इति भावः ।

ननु प्रकृतहेतौ प्रकृतसाध्यव्याप्तेरग्रहेपि यथा यो यत्र प्रवर्तते स कार्यतया तज्जानातीत्याकारात् स्तन्यपानादिप्रवृत्तितद्विषयककार्यता- ज्ञानयोर्व्याप्तिग्रहाद्गवानयनादिप्रवृत्तिलिङ्गेन गवानयनादिकार्यताज्ञानस्य

[दी] एकावच्छेदेन यावद्विशेषाभाववत्त्वस्योपाधित्वाच्च ।

सिद्धिः, तथा प्रकृते संयोगीययावद्विशेषाभावे तत्सामान्याभावव्याप्तेः व्यर्थविशेषणत्वादिना अग्रहेपि घटादिविशेषाभावकूटे तत्सामान्याभाव व्याप्तिग्रहादेव संयोगीययावद्विशेषाभावे पक्षधर्मताज्ञानाद्गगनादौ संयोग सामान्याभावसिद्धिर्दुर्वारैव, व्यतिरेकिहेतुकानुमिताविव सामान्यव्याप्त्य धीनविशेषसिद्धौ व्याप्तिविशिष्टपक्षधर्मताज्ञानस्य हेतुत्वानुपगमात्. नच विशेषाभावान्तरे सामान्याभावान्तरव्याप्तिग्रहात्संयोगविशेषाभावेन सामान्या भावसिध्युपगमे यावत्त्वाद्यविशेषितकपिसंयोगप्रतियोगिकाभावे कपिसंयो- गादिसामान्याभावादिव्याप्तिग्रहादेव संयोगादिप्रतियोगिकाभावेन तत्सा- मान्याभावसिद्धिसम्भवाद्यावत्त्वादिविशेषणमनर्थकम्, प्रकृतहेतुतुल्यनिखिल हेत्वन्तरेषु *(तत्प्रविष्टतत्तत्पदार्थघटित)प्रकृतसाध्यतुल्यसाध्यव्याप्तिग्रहापेक्षा- यास्स्वीकर्तुमशक्यत्वात्, तादृशसकलहेतुसाध्यानां युगसहस्रेणाप्यसर्वज्ञैर्ज्ञातु मशक्यत्वादिति वाच्यम्; उपस्थितयावत्तादृशहेतुषु तादृशतत्तत्साध्य व्याप्तिग्रहापेक्षया सामञ्जस्यात्, तावन्मात्रापेक्षायाश्च तत्तत्साधनधर्मिक तत्तत्साध्यव्याप्तिग्रहाभावविशिष्टतत्तत्साध्यसाधनोपस्थितेरनुमितिप्रतिबन्धकत या सूपपादत्वात्. एवं सति यावत्त्वविशेषणानुपादाने जात्यादिविशेषघट त्वाद्यभावे जात्यादिसामान्याभावव्यभिचारोपस्थितिदशायां संयोगादि सामान्याभावसाधनासम्भवेन तादृशविशेषणसार्थक्यात्, गगनाद्यवृत्तित्वसमा नाधिकरणनिरुक्तधर्मावच्छिन्नप्रतियोगिताकयत्किञ्चिदभावकं यद्यत्स्वं तदन्यो यो धर्मः स तन्निष्ठाभावप्रतियोगितावच्छेदक इत्येतादृशोक्तसामान्यव्याप्ति स्थलाभिषिक्तव्याप्त्यैव वा संयोगत्वादौ गगनादिनिष्ठाभावप्रतियोगिता वच्छेदकत्वं साधनीयम्, तत्र च नाऽननुगमो दोष इत्याशङ्क्य उक्तानुमाने उपाधिमाह—एकावच्छेदेने ति । अनवच्छिन्नतदीययाव-

* कुण्डलितग्रन्थो ऽधिक इव ।

